

१८६७ ) भगिनी निवेदिता ( १९११

जन्म-शत-सांवत्सरिकम् अभिवादनम्

# शारदा

ऑक्टोबर १९६७

आश्विन-कार्तिक १८८९

दीपावली-नवम-वर्षारम्भ-विशेषाङ्क-प्रकाशनम्

८ नोव्हेम्बर १९६७

पुणें ) महाराष्ट्रराज्यशासन-भारतकेन्द्रशासन-पुरस्कृता विश्वप्रिया ( मुम्बई

सौर १ कार्तिक १८८९

# शारदा

संपादकः वसन्त अ. गाडगीळ.

वर्षम् ८ अङ्कौ २३-२४

वार्षिकमूल्यम् रू. ५ * अस्य अङ्कस्य रू. ०-५०

॥ श्रीशारदाम्बा विजयतेतमाम् ॥

## ॥ नि म न्त्र ण म् ॥

सस्नेहादरं नमो नमः ।

'शारदा'-संस्कृत-पाक्षिकम् अस्मिन् दीपावली-महोत्सवे नवमं वर्षं प्रविशति । अस्मिन् परममङ्गलक्षणे

बुधवासरे कार्तिक शु. ७, १८८९ ( ८ नोव्हेम्बर ६७ )

प्रातः ८ तः १२ वादनान्तम्--

श्रीसारसबाग-श्रीसिद्धिविनायकमन्दिरे ( पेशवे-उद्यान-सम्मुखे पर्वतीमार्गे )

## श्रीगणेशयागानुष्ठानम्

सायम् ६-३० तः ८ वादनान्तम् —

उद्यान-प्रासादे ( स्काऊट-प्राङ्गण-संमुखे )

## शारदा-नूतन-वर्षारम्भ-विशेषाङ्क-प्रकाशनम्

श्रीशृङ्गेरि-शारदापीठ-श्रीचरणानां

## परमपूज्य-जगद्गुरु-श्रीमत्-शंकराचार्याणाम्

परमपवित्रे सान्निध्ये संपत्स्यते ।

तत्र उभयत्र तत्रभवतां सर्वेषां शारदोपासकानाम् उपस्थितिं साग्रहं समये प्रार्थयामहे ।

श्रीशृङ्गगिरि-शारदापीठ-श्रीचरणाः प्रथमम् एव पावयिष्यन्ति पुण्यपत्तनं शुभागमनेन । अतः परमभाग्योत्कर्षप्रद-दर्शनलाभेन साधनीयः समुत्कर्षः सर्वैः इति नः साग्रहं प्रार्थना ।

**श्रीजगद्गुरु-महाराष्ट्र-संचार-संयोजकः** { **वसन्त अनन्त गाडगीळ**
**संपादकः**

१८८९ शारदा-दीपावली-विशेषाङ्कः १९६७

## विशेषाङ्कस्य मूल्यम् रू. ५.००

**साहितीकाराः —**

डॉ. श्री. भा. वर्णेकर, पं. का. र. वैशंपायन,
डॉ. ग. बा. पळसुले, ल. वि. देशपाण्डे,
पं. श्रीपाद कवीश्वर, पं. वसन्तगाडगीळ,
कण्टकार्जुनः तथैव इतरे

त्रिवर्णं मनोज्ञं मुखपृष्ठम् ।

त्वर्यतां वार्षिकमूल्यप्रेषणाय । यैः पूर्वम् एव वार्षिकमूल्यं न प्रेष्यते तेभ्यः पञ्चरूप्यकमूल्यः सर्वाङ्गसुन्दरः अयं विशेषाङ्कः नैव प्रेष्यते ।

— संपादकः

---

# केशवः कौशिकपद्धतिश्च

ऋग्यजुःसामनाम्ना प्रसिद्धा वेदत्रयी यज्ञकर्मद्वारा प्राधान्यतया आमुष्मिकफला वर्तते । यश्चतुर्थो वेद इति प्रसिद्धः स पूर्वं चिरकाल-पर्यन्तं वेदपदवीमनारूढ एवासीत् । यज्ञार्थमनुपयुक्ता ये ऐहिकफला मन्त्रा अथर्वादिऋषिभिर्विरचिताः, तेषां संग्रहः पुरा 'अथर्वाङ्गिरसः' इति संज्ञया प्रथितो बभूव । किंतु त्रयीविद्यायां नावर्तत तेषां स्थानम् । तत्प्रापितं गोपथब्राह्मणकारेण । तस्य संग्रहस्य तेन प्रथमं ब्रह्मवेद इति पश्चाद् अथर्ववेद इति आख्या कृता । ऐहिकफले अस्मिन् संग्रहे अस्मिन्वेदे वा वर्तन्ते त्रिप्रकारकाणि कर्माणि । शान्त्यर्थं पुष्टयर्थम् अभिचारार्थं च तेषां प्रवृत्तिः । कथं कर्तव्यानि तानि कर्माणि, के च अथर्वाङ्गिरो-मन्त्रास्तत्र प्रयोक्तव्याः इत्यादिदर्शकः सूत्रग्रन्थः कौशिकमुनिना निर्मितः । एषां सूत्राणां भाष्यकार आसीत् कश्चिद् दारिलनामा । केनचित् केशवेन कृता 'केशवी' इति संज्ञिता आसीत् काचिद् वृत्तिरपि कौशिकसूत्राणाम् । किंतु तस्या वृत्तेः हस्तलिखितं खण्डितमेवासीत् । न प्राप्तम् अद्यावधि तत्पूर्णं पुस्तकं केनापि कुत्रापि । अथर्ववेदाध्यायिनां सौभाग्येन तत्पुस्तकं हस्त-लिखितरूपेण मया गालवपुरे प्राप्तम् । तत्रेयं केशवी वृत्तिः कौशिकसूत्र-प्रदर्शनपूर्विका वर्तते आद्यन्तसहिता ।

तत्र षष्ठे अध्याये अस्ति अभिचारकर्म । तस्मिन् कर्मणि प्रयोज्येषु मन्त्रेषु 'अमुं' 'अमुष्य' इत्यादिस्थाने यथाविभक्ति शत्रोर्नाम गृह्णीयात् इति सूत्रकारः कथयति । किंतु अयं वृत्तिकारः प्रत्यक्षमेव शत्रोर्नाम सूत्रव्याख्याने दर्शयति 'फटहतोऽमहुमद' इति भोजनपात्रं भिनत्ति, इदमहं महुमदस्य तुरुष्कस्य सूतिकर्णपुत्रस्य प्राणापानावप्याय-च्छामि इति । तस्मात्स्पष्टमेव ज्ञायते यदयं वृत्तिकारः न केवलं शब्द-व्याख्यानपरः किंतु प्रत्यक्षम् अभिचारकर्मकर्ता । एतत्प्रत्यक्षज्ञानम् अत्रैव न समाप्तम् । अस्यैव षष्ठाध्यायस्य समाप्तौ पुनरपि केशवः कथयति—

"अधर्म-संभवा दुष्टाः प्रजाहिंसनतत्पराः ।
तुरुष्कनाम्ना पापिष्ठाः देव-ब्राह्मण-हिंसकाः" ।

अग्रेऽपि पुनः

"पृथिव्यां श्रीभोजदेवो धर्मसंरक्षणाय च ।
देशमालवकोत्पन्नः श्रीराजगृहमेत्य च ।
भोजदेवोऽजयद्वेष्मान् सर्वेषां च प्रमूर्धनि ।
न तत्तुल्यो जगत्यस्ति न भूतो न भविष्यति ।"

अस्तीतिवचनात् सम्यङ्‌ निर्दिश्यते यदयं केशवः मालवाधीशभोजसम-

कालीनः । तुरुष्क-महुमदस्य नाशार्थं तेन कृतः अभिचार इति ।

अन्यच्च । ग्रन्थान्ते अनेन स्ववंशस्य स्वस्य च वर्णना कृता । तस्मिन्कालेऽपि आसीदेषा जनश्रुतिरिति कल्प्यते यत्—

"कौशिको वत्सशर्मा च तस्य पौत्रोऽथ दारिलः ।
शास्त्र-विज्ञानमेषां हि चतुर्थो नोपपद्यते ।"

किंतु अयं ग्रन्थकारः आत्मविश्वासपुरःसरं कथयति—

—'तदयुक्तं हि तद्वक्तुं बोद्धारः संत्यनेकशः ।' एषु बोद्धृषु जातः एकः केशवः अस्य केशवस्य प्रपितामहः । तस्माद् अनन्तो जातः । अनन्ताच्च सोमेश्वरः । सोमेश्वरविषये अनेन लिखितम्—

'श्रीमद्भोजपुरे विद्वान् आसीत् सोमेश्वरो द्विजः' इति । अतःपरं स्वविषये कथ्यते—

'तत्पुत्रकेशवेनैषा कृता कौशिकपद्धतिः' । पश्चादथर्वमाहात्म्यं कथयित्वा कृता ग्रन्थसमाप्तिः ।

अद्यावधि केशवस्यायम् इतिहासः अज्ञात एवासीत् । केशवस्य केवलं नाम तु सायणोऽपि जानाति । तेन अथर्ववेदभाष्योपोद्घातान्ते उल्लिखितोऽयं नामतः । किंतु एतेन वृत्तिग्रन्थेन सुष्ठु ज्ञायते यदयं गङ्गातीरस्थे 'भोजपुर' नगरे आसीत् मालवाधीशभोजसमये च । शारदाभक्तैरेष इतिहासः ज्ञेयः । 'शारदा' पाठकेषु यदि केनचिदेषा वृत्तिर्दृष्टा स्यात्, सा वार्ता मत्सकाशं प्रेषणीया । अलमद्य एतावदेव ।

'मुद्रिका'
८० मित्रमण्डलम्
पुण्यपत्तनम् ९

डॉ० हरि रामचन्द्र दिवेकर

# विवेकानन्दकन्या भगिनी निवेदिता।

कस्यांचित् कन्याशालायां काचिदध्यापिका काञ्चन बालिकाम् अन्वयुङ्क्त, "का युष्माकं राज्ञी" इति। बालिकया झटित्येवाङ्ग्ल-शासकत्वात् प्रोक्तं, "व्हिक्तोरिया देवी" इति। तदाध्यापिकया प्रोक्तं "नहि नहि सीमान्तिनी सीतादेवी एवास्माकं सम्राज्ञी"।

अहो ज्ञायतां कैषा अध्यापिका? किं भारतीया? उताहो भारत-निकटवर्तिनी? नहि नहि भारतारातिप्रान्तादागता काचिद् आङ्ग्लयुवती। अहो भाग्यं खलु भारतीयसंस्कृतेः यां न केवलं स्वे किन्तु परेऽपि स्तुवन्ति। सा अध्यापिका 'भगिनी-निवेदिता' नाम्नी। का एषा निवेदिता? 'मार्गारेट नोबलनाम्नी एषा आङ्ग्लयुवती स्वामी विवेकानन्दमहोदयानां वाक्प्रभावात् मन्त्रमुग्धा सती भारतीयजनसेवार्थं भारतीयसंस्कृतेः समाराधनार्थं भारतभूमिं प्राप्ता। अत्र आगतया तया पवित्रप्रतिज्ञां कृत्वा कार्यारम्भः कृतः। तस्मिन्नवसरे तया निवेदितम्।

पञ्चानामपि भूतानाम् अस्मितायाश्च दाहनम्।<br>
चितानलेऽद्य कुर्वेऽहमग्ने मां भस्मसात्कुरु।<br>
शक्ति मे देहि दुर्गे त्वं वज्रसारं बलं तथा।<br>
यावज्जीवं चरिष्यामि येनेदं मङ्गलं व्रतम्॥

तदारभ्य तस्याः कन्यायाः निवेदिता इति नाम विख्यातमभूत्। निवेदिता नाम समर्पिता। भारतभूमेः समुत्थानार्थं स्वयमेव समर्पिताभूत् सव निवेदिता इति।

भारतभूमिं प्राप्य निवेदितया कापि कन्याशाला प्रस्थापिता। तद्द्वारा तस्याः राष्ट्रकार्यारम्भः अभूत्। क्रान्तिकारकाणां सा मार्गदर्शिका सहायिका च। तस्याः भारतदेशाभिमानः प्रसिद्धः। इत्यस्मिन् विषये काचित् कथा श्रूयते।

अथ कदाचित् निवेदिता कन्दुकफलकक्रीडानिपुणानां सत्कारार्थं निमन्त्रिता। तत्समये सा बभाषे।

"कन्दुकफलकक्रीडा परदेशाद् आगता। तस्यां नैपुण्यं नाभिमान-स्थानम् ये भारतीयखेलाः तेषु नैपुण्यं प्राप्तव्यम्" इति।

एकैकनवैकमिते (ख्रिस्ताब्दे १९११) निवेदितया कृतम् आत्मार्प-णम्। अखिलं भारतवर्षं शोकविव्हलमभूत्। अत्रस्थाः सनातनधर्मिणः ये निवेदितां न केवलं स्प्रष्टुं किन्तु द्रष्टुमपि नेच्छन् तेऽपि तस्याः सेवया, परोपकारैः मधुरवचोभिः, कार्यकुशलतया तस्यां भृशं प्रीताः।

पूजनीया भगवती शारदामाता तां कन्याम् इव अमन्यत। षण्णवत्यधिकाष्टादशशततमे ख्रिस्ताब्दे (१८९६) वङ्गप्रान्ते महान् ग्रन्थिज्वरः प्रादुर्भूतः। करालः खलु स कालः। प्रतिदिनं सहस्राधिकाः जनाः मृत्युगुहां प्रविशन्ति स्म। सविवेकानन्दा निवेदिता एतस्मिन् अवसरे अतीव सेवातत्परा, कार्यमग्ना च स्वात्मानमपि विस्मरति स्म।

एवंविधस्य कार्योत्साहस्य सा खलु मूर्तिः अनन्तकालपर्यन्तं भारतीयान् प्रचोदयिष्यति। स्वसंस्कृतिः स्वदेशं, स्वज्ञातिजनान् अपि विहाय भारतसंस्कृतेः समाराधनार्थमागता निवेदिता भारतजनानां हृदयस्वामिनी एव समभूत्। अधुना खलु वयं वदामः।

लोभं हित्वा सर्वदा कार्यमग्नाः श्रद्धावन्तो नैष्ठिकब्रह्मवन्तः।
क्रीणन्तश्च प्राणमूल्यैर्वचांसि सेव स्याम ध्येयवह्निप्रदीप्ताः॥

ज्ञानप्रबोधिनी
५१४ सदाशिव, पुणें २

विश्वनाथ गुर्जर

## विवाह-वयो-मर्यादा प्रकल्पश्च ।

सेयं वयोमर्यादा हनुमत्पुच्छवद्दीर्घदीर्घायमाणा वधूपितॄणां वधूनां च मनसि चिरं धूमायते । तेन च सामाजिकं वातावरणं चिन्तामेघाच्छादितं सत् दुर्दिनायते । विचारविषयश्चायमधुना प्रचलितः लोकसभायाम् । अतः जनहितदृष्टया शास्त्रेतिहासतज्ज्ञमताद्यनुसारेण विचारयितुं प्रयत्यते । तत्र बाल-प्रौढविवाहयोः कृतक्रियमाणयोः अनुभवं विचारकैः मनसीकृत्य सिंहावलोकनसमयः संप्राप्तः ।

### बालिकोद्वाहः

विषयेऽस्मिन् समाजहितचिन्तकैः मन्वादिस्मृतिकारैः सुनिश्चित्य समुपदिष्टं रजोदर्शनात्पूर्वं कन्यायाः विवाहः कर्तव्य इति । रजोदर्शनसमयोऽपि च समर्थितो यथा–

"अष्टवर्षा भवेत्कन्या, नववर्षा तु रोहिणी ।
दशवर्षा भवेद् गौरी अत ऊर्ध्वं रजस्वला ॥" मनु.

तदा खलु कोमललतातुल्या बालिकामतिः यं कमप्याश्रयति, शीघ्रं तन्मयीभूय क्रमेण एकवर्षानन्तरमेव सुखमग्ना संजायते; इत्यभिहितं विवेकिभिः

"कृतान्तः कान्तो वा समजनि न भेदः प्रथमतः,
ततो द्वित्रैर्मासैर्मनुज इति जग्राह हृदयम् ।
ततोऽसौ मत्प्रेयानहमपि तदीया प्रियतमा,
क्रमात् प्राप्ते वर्षे प्रियतममयं विश्वमखिलम् ॥"

तथा वेणीसंहारेऽपि–

'स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि' इति ।

एवं चास्मदीयधर्मशास्त्रकारैः कन्यकाविषये बालिकाविवाह एव श्रेयस्करः इति प्रत्यपादि । पाश्चात्यसमाजशास्त्राभ्यासकैरपि गणितागतपद्धत्या भूयोदर्शनजन्यव्याप्तिनियमानुसारेण चैतदेव सिद्धान्तितं यत्, कन्यकानां विवाहाः यदृच्छया ये षोडशवर्षदेशीयानां संजाताः, ता एव पुरन्ध्रयः इतराभ्यः अधिकसुखेन नन्दन्त्यः विराजन्ते; तासु घटस्फोटप्रवृत्तिरपि न्यूनतराऽत्रलोक्यते । यथा यथा च वयः वृद्धिगतं भवति तथा तथा प्रतिशतं घटस्फोटाधिक्यं, संसारसुखनीरसत्वं च भवतीति भूयशोऽनुभूयते इति ।

वरविषये विवाहयोग्यसमयश्च अध्ययनसमाप्त्यनन्तरीकः मन्वादिभिस्तु,

'वेदम् अधीत्य वेदौ वा वेदान् वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रमाविशेत् ।। मनु इति ।

तेन च स्नातकेन विंशतिवर्षादारभ्य पञ्चाशत्पर्यन्तं कदापि अनुरूपा यवीयसी अजातरजोदर्शना वोढव्येति प्रतीयते ।

### प्रौढपरिणयः

प्रौढयोस्तु विवाहः वयोधिक्यजनितबुद्धिकाठिन्यजननाद्वा अन्यान्यसंस्कारैः परिणतवल्लीवत् धृताननुरूपाकारवशेन वा नाद्वैतत्वं भजते । विना चोभयोरैकरूप्यं, बहुलेषु मतरुचिभेदेषु न सुखलेशोऽपि अनुभूयते । अन्ततश्च निर्विण्णयोः वैषयिकापेक्षारूपप्रयोजनपूर्तिपूर्वमेव घटः स्फुटयते । प्रौढप्रेमविवाहः अधिकादधिकं नववर्षपर्यन्तं जीवति । बालोद्वाहश्च दृढप्रेमनिबद्धतया न्यूनान्न्यूनः पञ्चविंशतिसंवत्सरात्मकः । तत्र परस्परार्थं दुःखसंमर्षणाय मानसिकशक्तिः प्रवर्धते इति संशोधकसमाजशास्त्रिणां संमतम् ।

प्रौढयोः प्रेमप्रवाहः ज्वालामुखिपर्वतोद्गतलाक्षारसोद्गारवत् अतीव वेगेन बहुशश्च प्रधावति । खानपानयोः, बहिर्गमनागमनयोः, क्रयविक्रययोः तथा क्षुद्रातिक्षुद्रकार्येष्वपि अनन्यसहचरयोः कपोतयुगलवत् तयोः प्रीतिप्रकर्षः प्रथमं प्रवृद्धोऽपि क्रमेण अतिपरिचयादवज्ञान्यायेन ह्रसति । अपत्यजनने तत्संवर्धनादौ दृश्यमाना तत्परता क्षीणा क्षीणतरा च भूत्वान्ते तौ परस्परमुखावलोकनमपि परिहरत इति सार्वत्रिकमधुना । बालविवाहे च तद्विपरीतमनुभूयते । त्र्यम्बकेश्वरस्थब्रह्मगिरौ गोदावरी प्रथमं बिन्दुक्रमेण, ततो गङ्गाद्वारे धारारूपेण, ततोऽधस्तात् प्रवाहरूपेण धावमाना दृश्यते । तथा आ बाल्याद्द्वयेन खण्डिताः प्रीतिविप्रुषः विवाहसमयादारभ्योद्गच्छन्ति । अथ संवत्सरान्तर्गतनैकोत्सवप्रसङ्गेन भीतिनाशेन परिचयवृद्ध्या ते धारारूपं धरन्ति । अग्रे च विस्तृतगौतमीप्रवाहः तीरस्थानिव स प्रवाहः संबन्धिजनानानन्दयति । तेन तत्र अवर्षणादिसमयवत् संसारे संकटसमयोऽपि न गण्यते । अन्ते च सप्तप्रवाहैः सागरैक्यवत् अखिलं विश्वं प्रियतममयं भवतीति कवी अभिप्रायनां ।

### उभयोः परीक्षणम्

यद्यपि बालविवाहोऽयं परिणते वयसि सुखलाभप्रदस्तथापि 'श्रेयांसि बहुविघ्नानि ' इति न्यायेन बहुविघ्नाक्रान्तत्वात् तत्सुखं दुर्लभं भाति बहुशः ।

१ कदाचिद्विवाहोत्तरं कतिपयप्रवर्धमानायां चाप्तजनावधीरणायां, शिक्षणाभावेन चापन्ने स्वोपजीविकादौर्लभ्ये, वपनाचारेण वैरूप्यसंप्राप्तौ अगतिकतया प्रतिबद्धायां समाजद्वारि किं नु कर्तव्यं वराक्या बालिकया? कथं च वैधव्यधर्माचरणं, कया वा शक्यमधुना पत्यनुगमनम्? कथं वा जीवितव्यम्?

२ यत्र नेयमापत्तिः तत्र श्वश्रूः बाहुल्येन स्नुषया सह न सौहार्दम् आचरति ’ वस्तुतः पुत्रीनिर्विशेषं श्वश्र्वा तस्यां वर्तितव्यम् । परं बहुशो दृश्यमानपक्षपातेन कलहाग्निः क्रमशः प्रज्वलति । यावज्जीवं च धूमायते ।

३ निर्धनकुमारीणां अगत्या द्वि-त्रि-चतुर्विवाहितेन जरठेन सह परिणयोऽनिवार्यो भवति । तेन च तासां वैधव्यदुःखमप्यनिवार्यमेव ।

४ स्त्रीणां शिक्षणायावकाशो न भवति। आबाल्यात् प्रसूतिरनपेक्षितापि भवत्येव । शिक्षणाभावेन व्यवहारे मुग्धता, परावलम्बिता, जीविकासाधनापहस्तितता चापद्यते । अनपेक्षितबहुसंततिभिः लोकसंख्याप्रवृद्ध्या दारिद्र्यं देशोन्नतिप्रतिबन्धश्च जायते । एवं च समाजस्थैर्यानुरोधेन हितावहोपि बालोद्वाहः निर्दिष्टानुपपत्तिभिरव्यवहार्य इति कृत्वा शारदानुशासनं संमतम् ॥

प्रौढयोश्च विवाहोऽनिवार्योऽभवत् । तत्र चाधुनाग्रिमदोषाः समाजे आपन्नाः किंकर्तव्यतामूढताम् आपादयन्ति । १ स्त्रीणामपि शिक्षणेनार्थिकप्रश्नः तीव्रतां धारयति । २ उभयोरपि प्रौढत्वाद्विभिन्नरुच्या विवाहमेलनं दुर्घटमिव संजातम् । ३ घटितेऽपि घटस्फोटप्रसङ्गभीतिः शिरसि भवति । ४ कदाचित् पूर्वं स्वैरपरिचयेन विलासप्रवृत्तिर्दृश्यते । ५ प्रौढानां सौभाग्यकाङ्क्षिणीनां गृहे गृहे स्थितिः । ६ अन्यवर्णीयैः अनियन्त्रितसंबन्धेन वर्णसंकरप्रसङ्गः । ७ विवाहोत्तरं च वृद्धमातापित्रोरुपेक्षया पृथक् निवासरूढ्या एकत्र कुटुम्बपद्धतिविध्वंसेन गृहशान्तिसौख्यहानिश्च परम्परागतधर्माचरणनाशश्चानुभूयते ।

लोकसंख्याप्रवृद्धिप्रतिरोधाय वधूनां वयोमर्यादावर्धनेनोपर्युक्तदोषाः तीव्रतराः भवेयुः । अस्तंगतबाबिलोनमिश्रादिसंस्कृतिवत् भारतीयसंस्कृतेरपि सामाजिकस्थैर्यविनाशप्रसक्त्या विलोपोऽप्यापद्येत । पर्युषितमिव रसहीनं सर्वं जीवनं भवेत् अतः यावच्छक्यं स नियमः ‘ अहितकर ’ इति कृत्वा प्रतिरोद्धव्यः ।

**प्रकल्पः**

अत्र सर्वाङ्गीणविचारं कृत्वा विवेकिनां पुरतः समाजहितार्थं मयाऽयं विचारः संसूच्यते । येनोभयविधविवाहयोः दोषाः न प्रसज्येरन्,

व्यावहारिकलाभः, धर्मानुसरणमपि भवेत् ।— विवाहविधिकलापे विभागद्वयं कर्तव्यं, वाङ्निश्चय-पाणिग्रहण-सप्तपदीपर्यन्तो भागः प्रथमः, वररात्रिमहः, वरगृहे वधूप्रवेशे लक्ष्मीपूजनं, नामकरणं, ऋतुशान्तिश्च इत्यपरो भागः। औत्तरीयाः विशेषतो मरु-सिन्धु-देशीयाः विवाहात्पूर्वं दशपञ्चसंवत्सरेभ्यः प्राक् दृढं वाङ्निश्चयं कृत्वा वरवध्वोः शिक्षा-सामर्थ्यप्राप्त्यनन्तरं विवाहोत्सवं कुर्वते। तथैव सकलैरपि वाङ्निश्चयादारभ्य पूर्वो भागः वधूगृहेऽनुष्ठातव्यः। मनुना 'अमन्त्रको विधिः स्त्रीणाम्' इत्याद्युपनयविषये उपदिष्टं, तदनुसारं अस्माभिरयं संस्कारः समन्त्रकः कर्तव्यः। यावच्छक्यं रजोदर्शनात्पूर्वमेवानुष्ठाने शास्त्रमनुमतं भवेत्। तस्य 'वाङ्निश्चय' इत्येवास्तु अभिधानम्।

वरवधूसमागम एवाधुना विवाहपदेन रूढः, राजकीयैरपि तदनुसृत्यैव नियमाः क्रियन्ते। अस्माभिस्तदविरोधेन मध्यममार्गानुसरणे न स्याद्दोषलेशः, व्यावहारिकसुविधाश्च भवेयुः। अतोऽपरः विवाहाख्यविधिभागः अनन्तरं कर्तव्यः।

मनुना 'अष्टवर्षा भवेत्कन्या इत्यारभ्य रजोदर्शनात्पूर्वं पाणिग्रहणविधिम् उपदिश्य "त्रिंशद्वर्षो वहेत् कन्यां हृद्यां षोडशवार्षिकीम्' इति समागमकालः अनन्तरमेव विहितः। निषेकसंस्कारस्य तदैव सुयोग्योऽवसरः तदनुसरणे न स्यात् स्त्रीशिक्षणस्यान्तरायः, न स्याच्च शासननियमभङ्गः।

उभयोः कुलयोः प्रत्यक्षाप्रत्यक्षरीत्या वधौ दृष्टिः स्यात्, तेन सा रक्षिततरा भवेत्। वधूपिता चिन्तामुक्तो भवेत्। वधूश्च स्वयं मनोव्यथानिर्मुक्ताऽऽनन्देन शिक्षा-सामर्थ्यसंपन्ना भूत्वोभयोः न भारभूता प्रत्युत सहायिका भवेत्। अग्रे च सीतावत् उभयकुलनन्दिनी भूत्वा सन्मानार्हा संपद्येत। न चात्र बालवैधव्याशङ्का कर्तव्या, 'सा चेदक्षतयोनिः स्यात् पुनः संस्कारमर्हति' इति याज्ञवल्क्याज्ञया कुमार्याः स्वगृहे स्थितायाः एव तस्याः पुनर्मण्डनविधानात्। न श्वश्रूः स्नुषया कलहं कर्तुं शक्नोति बालिकायाः स्वगृहे एव वर्तमानत्वात् तादृक्परिचयविरहाच्च। एवमेवान्येऽपि दोषाः शक्यपरिहाराः।

प्रकल्पोऽयं सर्वथा निर्दुष्टः उत्कृष्टश्च सर्वैः व्यावहारिकैः काममाचरितुं योग्यः, शासकीयविचारकैः प्रदेयानुमतिकः, धर्माधिकारिभिः, जगद्गुरुभिश्च प्रचारयितुम् उचितः। विना चैतादृशविवेकं सांप्रतिकी कष्टमयी दशा तीव्रतरताम् आपद्येत। अतः संप्राप्तसमयेऽस्मिन् कविश्रेष्ठभवभूत्युक्तप्रकारेण "यत् सुखदुःखयोरद्वैतं, सर्वास्ववस्थासु अनुगतं, यत्र हृदयस्य विश्रामः, यत्र जरसापि अहार्यो रसः, आवरणात्ययात्कालेन

परिणते स्नेहसारे यत्स्थितं, तस्य सुमानुषस्य– समाजगतैतत्प्रकल्पेन भाग्यशालिदाम्पत्यस्य एकं भद्रम् अहं प्रार्थये"। तदुक्तम्—

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यत्,
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ॥
कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं,
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥

इति शम् (उत्तररामचरिते)

(सूचना – अत्रत्यपाश्चात्याभिप्रायः कै. गो. म. जोशीकृतात् 'हिन्दूनां समाजरचनाशास्त्र' ग्रन्थात् परामृष्टः)

डेक्कन कॉलेज पं. अनन्तशास्त्री पिङ्गळे,
पुण्यपत्तनम् ६

# चिरं जीवन्तु पू. गुळवणीवामनरायमहाराजाः

पुण्यपत्तने श्रीवासुदेवनिवासाश्रमं निर्माय पुण्यस्य पुण्यत्वं वर्धयतां



योगिराज - गुळवणी - वामनराया-णाम् अशीतितमवर्षपूर्तिनिमित्तकः सहस्रचन्द्रदर्शन-शान्तिमहोत्सवः सोत्साहं सुसंपन्नः नचिरमेव पुण्यनगरे ।

तत्र महोत्सवे श्रीदत्तयागादीनां विविधानाम् अनुष्ठानानां साफल्यार्थं भारतश्रेष्ठाः वैदिकाः शास्त्रिणः समुपस्थिताः आसन् । पू.कवीश्वरदत्तमहाराजगुरुचरणाः तत्र संयोजकाः । पू. विष्णुतीर्थ-महाराजयतिचरणानां करकमलाभ्यां समर्पितं सत्कारसमित्या सम्मानपत्रम् ।

(पृष्ठं क्र. १३ द्रष्टव्यम्)

**चिरं जीवन्तु पुण्यात्मानः योगिराज–गुळवणी-वामनरायाः ।**

**— संपादकः**

## " संस्कृतं सर्वोच्चैः स्थानं मण्डयिष्यति "

**— केन्द्रशिक्षाराज्यमन्त्री प्रा. शेरसिंहः**

**मुम्बई** दि. २२ सप्टेम्बर ६७

भारतकेन्द्रशासनस्य शिक्षाराज्यमन्त्रिणः प्रा. शेरसिंहमहोदयाः श्रीवत्सबालमन्दिरसभागृहे सत्कृताः सम्माननपत्रसमर्पणेन विविधाभिः संस्कृतसंस्थाभिः । पं. श्रीपादकवीश्वरैः शारदाकारैश्च परिचायिते महाराष्ट्रस्थ-संस्कृतप्रसारणकार्ये मुम्बईनगरश्रेष्ठिभिः श्री. करमसी सोमैया-महोदयैः समर्पितं संस्कृत-सम्मानपत्रम् । ( पृष्ठं क्र. १४ द्रष्टव्यम् )

सम्मानस्वीकारोत्तरं प्रा. शेरसिंहैः प्रोक्तम्–– " भारतवर्षे यदा भारतीयभाषाः स्वीयं मानार्हस्थानं प्राप्स्यन्ति तदा भाषाजननी संस्कृत-भाषा अपि सर्वोच्चैः स्थानं स्वाभाविकम् एव मण्डयिष्यति । भारत-शासनं सर्वासां भारतीयभाषाणां विकासार्थं प्रत्येकं कोटिरूप्यकमितं द्रव्यं व्ययीकरिष्यति । न तत्र संस्कृतम् अपवादभूतम् । "

श्रीमतां भगवदादिष्टधर्ममर्यादापरिपालयितॄणां स्वीयदिव्यादश-
चरितमहिम्नैव सद्धर्ममार्गप्रचोदितनैकजनबुद्धिनिवहानां
विश्वाधारभगवद्विभूतिरूपाणां

# श्रीवामनरायगुळवणीमहाराजानां करकमलयोरुपहारीकृतं

# संमानपत्रम्

समस्तदोषशोषणं स्वभक्तचित्ततोषणं
निजाश्रितप्रपोषणं यतीश्वराग्र्यभूषणम् ।।
त्रयीशिरोविभूषणं प्रदर्शितार्थदूषणं
भजेऽत्रिजं गतैषणं विभुं विभूतिभूषणम् ।।१।।

श्रीमत्सु सन्ततजगन्मङ्गलावहतपोऽनुष्ठाननिरतेषु भगवच्चरणार-
विन्दसंचिन्तनपरिसंशुद्धाशयविभूषितेषु यथावत्पाण्डित्यं निर्विद्य बाल्येनैव
तिष्ठत्सु आप्तकामश्रीगुरुकृपास्रोतःसमृद्धजीवनेषु श्रीवामनरायगुळवणी-
महाभागेषु—

सादरं साष्टाङ्गं च प्रणमन्तो विज्ञापयामः —

प्रेष्ठाः !

नैकजन्मसुकृतपरिपाकफलं तत्रभवत्सदृशानां महापुरुषाणां, दुर्लभं,
देवानुग्रहहेतुकं च संश्रयमासाद्य स्वीयं जीवनं धन्यं मन्यामहे ।

'लयविक्षेपकषायरसास्वादेभ्यो रक्षितं चित्तमविघ्नेन ब्रह्मण्यव-
स्थितं भूयादिति भवन्तो महान्तोऽनुगृह्णन्तु' इत्येतत्प्रार्थनावचनं; लया-
दिदोषापनयनस्थैर्यादिगुणाधानाख्यसंस्कारपदार्थमाश्रितजनचेतसि निद-
धानानां महापुरुषाणां स्वाभाविकं सार्वकालिकं च महत्त्वं व्यनक्ति।
'परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन । योजयति परे तत्त्वे स
दीक्षयाचार्यमूर्तिस्थः' एतद्वचनं च; सदन्तेवासिनां गुरुदीक्षाक्षततमस्कत्वं
व्यामोहात्यन्ताभाववत्त्वं च संपादयतां तेषामेव अलोकसामान्यं प्रभावं
द्योतयति ।

तदेतादृशमहापुरुषाग्रेगणनीयास्तत्रभवन्तः; एतदस्मज्जन्मसाफल्य-
संपादकसंमाननपत्रबिल्वस्वीकारपूर्वकं, जगदीशितुरकम्पयानुकम्पया पूर्णं
निरामयं च पुरुषायुषं समासाद्य, सन्ततमस्माननुगृह्णन्तु, समुद्धरन्तु च,
'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादि दुरुद्धरदोषपङ्क-
निमग्नं भारतवर्षमित्येव मङ्गलायतनमूर्तिधरस्य भगवतश्चरणारविन्द-
योरनवरतं प्रार्थयामहे इति ।

**चैत्रकृष्णसप्तम्यां भानौ १८८९** — **तत्रभवदनुग्रहकांक्षिणः**
**श्रीवासुदेवनिवास, कर्वे पथ,** — **सहस्रचन्द्रदर्शनशान्तिसमिति-**
**पुणे ४** — **सभासदः**

# महाराष्ट्रराजधान्यां मुम्बईनगर्यां
# केन्द्रीय-शिक्षा-राज्यमन्त्रिभ्यः
# प्रा. शेरसिंहमहोदयेभ्यः संमानपत्रम्

अयि मान्याः

भारतशासनस्य शिक्षाराज्यमन्त्रिपदस्वीकारोत्तरं प्रथममेव महाराष्ट्रराज्ये पदन्यासं कृतवतां श्रीमतां स्वागतसमारोहे महाराष्ट्रराज्यस्य संस्कृतैकनिष्ठाः प्रजाजनाः वयं कमपि अनितरसाधारणं समाधानातिशयं हर्षोपेतम् अनुभवामः ।

भारतवर्षे शिक्षामन्त्रालये पै. मौलाना आझाद महोदयेभ्यः आरभ्य प्रा. कबीरछगलान्तं सर्वेषां शिक्षाविदां परंपरायां संस्कृतनिष्ठं डॉ. त्रिगुणसेनमहोदयं तथैव श्रीमन्तं सिंहानुगुणं वीरवरं प्राप्य सत्यं नन्दति नन्दति नन्दत्येव समस्तं संस्कृतं जगत् ।

आङ्ग्लशूद्रवृत्या स्वात्मानं बहु मन्यमानानां साम्राज्ये राष्ट्रसंजीवनीं मधुरवाणीं तस्याः यथार्थमानार्हस्थाने राष्ट्रभाषापदे स्थापयितुं बद्धपरिकराः त्यक्तसर्वस्वाः सर्वे वयं देववाणीसमुपासकाः सुदृढं समाशास्महे यत् तत्रभवतां शासनकाले भारतं 'भा'रतं भविष्यति संस्कृतामृतपानेन भारतीय-भाषा-भगिनीनां सर्वोत्कर्षः च समेषां भारतवासिनां भाग्यवत्तां वर्धिष्णुतां नेष्यति इति ।

विश्वमातरं सुरगवीं वाक्सम्राज्ञीं संस्कृतवाणीं विश्वप्रियां विश्वमनोनुकूलां संपादयितुं श्रैमत्कं सर्वात्मना सहयोगं प्रार्थयमानाः वयं सर्वे स्वल्पाक्षरैः सारगर्भैः एतैः शब्दैः पुनरेकवारं श्रीमद्भ्यः 'स्वागतं' साभिनन्दनं साभिवादनं च व्याहरामः ।

**श्री. धुं. कवीश्वर** — टिळक-विद्यापीठम्,
**ल. म. चक्रदेव** — श्रीवत्स-बाल-मन्दिरम्
**वसन्त अ. गाडगीळ** — 'शारदा'
**दाजी भाटवडेकर**
अ. भा. संस्कृतसाहित्यसंमेलन-महाराष्ट्र शाखा

शुक्रवासरे १० भाद्रपद १८८९—२२ सप्टेम्बर १९६७

# शन्तनुर्नास्तिशान्तनुः ।

श्रुति-स्मृति-पुराणेभ्यः समाहृत्य यथायथम् ।
पूर्वजानां चरित्राणां कोशकारं नमाम्यहम् ।।

*अस्यैव आयुर्वर्धापन-समारोहः संजातः श्रावणमासस्य कृष्णपक्ष-तृतीयायां सौम्यवासरे राष्ट्रपतेः साभापत्ये । तत्र कोशकारगुणवर्णनसमये किर्लोस्करोपनामकेन श्रीशन्तनुरायेण कथिता कथैका । यदा अनेन शन्तनु-रिति शब्दः कोशे न दृष्टः तदा तेन पृष्टः कोशकारः कथितवान् यन्महा-भारते तस्य नाम शान्तनुः, तेनैव नाम्ना तस्य चरित्रकोषे संगृहीतं च इति । तेन तत्रोपस्थितानां मनसि शंका संजाता यत् कः शब्दः शुद्धः शन्तनुः शान्तनुर्वा । चरित्रकोशे शान्तनुविषये वर्तते निम्नप्रकारक उल्लेखः-"याचे मळ नांव महाभिषज्-पण शान्त मनःस्थितीतल्या पुरुषाचा पुत्र म्हणून हे नांव (म. आ. १०३, २२ कुं.) आणि वृद्धासहि यौवन देणारा याचा स्पर्श होता म्हणून शान्तनु असें नांव पडलें (भा. ९-२२-१२, म. आ. ६३-४० कुं)" एतस्माज्ज्ञायते यच्चरित्रकारेण अस्मिन् विषये कुम्भकोणनगरे प्रकाशितस्यैव महाभारतपुस्तकस्य आधारो गृहीत इति ।

ऋग्वेदस्य दशमे मण्डले अष्टानवतितमं सूक्तं देवापिना प्रणीतम् । अयं देवापिः शन्तनोरग्रजः । तस्य सूक्ते प्रयुक्तम् एतन्नाम त्रिवारम् । तत्रत्यं चतुर्थ्येकवचनान्तं पदं 'शन्तनवे' इत्येव । शाकलेन महर्षिणा कृतेषु पदेष्वपि पठ्यते 'शंऽतनवे' इति । यास्कसायणादिभिरपि तन्नाम तथैव गृहीतम् । भागवतेऽपि--

'अभवत् शन्तनूराजा प्राङ्महाभिषसंज्ञितः ।
यं यं कराभ्यां स्पृशति जीर्णयौवनमेति सः ।
शांतिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः'

इत्यत्र वर्तमानेऽपि शान्तिशब्दे राज्ञो नाम कथितं 'शन्तनुः' न 'शान्तनुः' । महाभारतस्यापि नैकैः पण्डितैः संशोधिते संस्करणे सर्वैरेव स्वीकृतः पाठः शन्तनुरेव । स्वयंचरित्रकोशकारैरपि अत्रैव 'शान्तनुः' इति नाम स्वीकृतम् । अन्यत्र अस्यैव भार्यायाः सत्यवत्या विषये, पुत्रस्य भीष्मस्य विषये, भ्रातुः देवापेः विषये सर्वत्रैव 'शन्तनुः' इत्येव नाम्ना कृतः प्रयोगः दृश्यते चरित्रकोशे ।

अतः प्राचीनतमे ऋग्वेदे, संशोधिते महाभारते, भागवते, अस्मि-न्नपि चरित्रकोशे 'शन्तनुः' इत्यस्यैव शब्दस्य प्रयुक्तत्वात् सुष्ठु सिद्ध्यति यद् अस्य यथार्थं नाम शन्तनुः न शान्तनुरिति ।

डॉ. ह. रा. दिवेकर

---

* विद्यानिधि-चित्राव-सिद्धेश्वरशास्त्रिणाम्

## शा र दा–गौ र व–ग्र न्थ मा ला

| पुष्पम् | लेखकः | मूल्यम् |
|---|---|---|
| १. श्रीराजेन्द्रप्रसादचरितम् | — पं. वासुदेवशास्त्री लाटकर | ३.०० |
| २. वात्सल्यरसायनम् | — प्रा. श्री. भा. वर्णेकर | १.०० |
| ३. शिक्षैषा सात्त्विकी सताम् | — प्रा. रं. रा. देशपाण्डे | २.०० |
| ४. श्रीरामकृष्णपरमहंसीयम् | — प्रा. श्री. भा. वर्णेकर | १.२५ |
| ५. बालकानां जवाहरः | — पं. विघ्नहरि देव | ०.४० |
| ६. श्रीमान् विन्स्टनः चर्चिलः | — पं. औदुम्बरकर शास्त्री | ०.६४ |
| ७. अप्पाशास्त्री : साहित्यसमीक्षा | — प्रा. अशोक अकलूजकर | २.०० |
| ८. श्रीशिवराज्योदयमहाकाव्यम् | — प्रा. श्री. भा. वर्णेकर | ( क्रमशः ) |
| ९. 'समानमस्तु वो मनः' | — डॉ. ग. बा. पळसुले | ३.०० |
| १०. मराठी–संस्कृत-शब्दकोषः | — जोशी-परांजपे-गाडगीळ | (क्रमशः) |
| ११. भूपो भिषक्त्वं गतः । | — पं. ग. पां. लोण्ढेशास्त्री | १.०० |
| १२. विनायक-वीर-गाथा | — डॉ. ग. बा. पळसुले | ३.०० |
| १३. आङ्ग्ललघुकाव्यानुवादमाला | — पं. ल. ज. खरे | २.०० |
| १४. श्रीराजयोगभाष्यम् | — डॉ. चि. त्र्यं. केङ्घे | ५.०० |
| १५. मुक्तक-मञ्जूषा | — दि. दा. बहुलीकर | २.०० |

प त्र व्य व हा र स्था न म्

'शारदा' – कार्यालयः पुण्यपत्तनम् २

# मन्त्रजागर : संक्षिप्त माहिती

*

लेखक

घनपाठी द. पां. क्षिजवडेकरगुरुजी

वेदपाठशाळा, पुणें २

*

संस्कृत-'शारदा'-प्रकाशन, पुणें २

***

मूल्य २५ पैसे

॥ श्रीः ॥

# किंचित् प्रास्ताविक

"**वेदोऽखिलो धर्ममूलम्**" हें वैदिक धर्माचें मूळ सूत्र आहे. भारत देश धर्मप्रधान आहे व सर्वधर्मांचें मूळ अधिष्ठान वेद आहेत. त्या वेदांचें परंपरेनें रक्षण करण्याची जबाबदारी मुख्यतः वैदिक धर्मानुयायांवर आहे. पण गेल्या अनेक शतकांपासून भारतास कमीअधिक प्रमाणांत परधर्मीयांच्या पारतंत्र्यातच राहण्यांचा दुर्दैवी प्रसंग आल्यामुळें वेदांविषयी वैदिक-धर्मानुयायांनाहि कांहीं माहिती राहिली नाहीं. अशाहि करालकालांत ज्या वैदिक ब्राह्मणांनीं आपल्या सर्व वैयक्तिक सुखाचा त्याग करून व अक्षरशः रक्ताचें पाणी करून आजपर्यंत वेदविद्येचें रक्षण केले, त्या वेदोनारायणांस सर्व वैदिक-धर्मीय लोकांनीं अत्यादरानें नमन करून त्यांचा सदैव गौरवच केला पाहिजे. त्याप्रमाणें आजहि वेदाविषयीं नितांत आदर मनांत ठेवून त्यावर श्रद्धा ठेवणारे लोक वेदमंत्र कानांवरून तरी जावेत अशी इच्छा करतात व वैदिक-ब्राह्मणांची यथाशक्ति पूजा करून त्यांच्या ऋणांतून अंशतः तरी मुक्त होण्याचें श्रेय संपादन करतात. पण ही त्यांची श्रद्धा किंवा आदर एका दृष्टीनें आंधळा आहे. कारण या लोकांना वेदाचा अर्थ समजणे तर दूरच पण साधी मंत्र-पद्धतीहि माहीत नसते. त्यांच्यासाठी भारतांतील प्रसिद्ध घनपाठी वे. मू. **द. पां. किंजवडेकर गुरुजी** यांनीं '**मंत्रजागरासंबंधी संक्षिप्त माहिती**' या नांवाची ही जीं लहानशी पुस्तिका काढली आहे त्यावरून वेदमंत्र म्हणण्याच्या प्रचलित पद्धतीची कांहींशी तोंड-ओळख जिज्ञासू लोकांना होईल यांत शंका नाहीं. या पुस्तिकेंत सर्व परिचित असणाऱ्या '**यज्ञेन यज्ञं**' या मंत्राच्या उदाहरणानें मंत्रजागराची माहिती करून दिली आहे. व तदनुरोधानें जटा, घन, इत्यादि विकृतीचेंहि स्वरूप दाखविलें आहे. तें उपयुक्तच आहे.

---

... वेद हे अनादि व अपौरुषेय आहेत असा वैदिकांचा सिद्धांत आहे. त्यामुळें त्यांच्या उत्पत्तीचा काळ किंवा त्यांचे कर्ते यांचा विचार करण्याचें त्यांना कांहींच कारण नाहीं. पण ज्यांना वेदांचें यथार्थ स्वरूपच आकलन झालें नाहीं व होणें शक्यहि नाहीं अशा कांहीं आधुनिक पाश्चात्य व पौरस्त्य पंडितांनी वेदांचा काल व कर्ते ठरविण्याचा अपुरा व अयशस्वी प्रयत्न केला आहे. त्यांच्या या संबंधीच्या विचारांचा साकल्यानें एकत्र विचार केल्यास कोठेंच एकमत झालेले व कोणताच

निश्चित ठाम सिद्धांत निघालेला दिसत नाहीं. याचें कारण उघडच आहे कीं, वेद-काल-निर्णयासाठीं त्यांनीं उपयोगांत आणलेलीं साधनें आणि प्रमाणें अपूर्ण आणि दुर्बल आहेत. उदाहरणार्थ-कित्येकांनीं 'भूस्तर' शास्त्राच्या आधारानें वेदकाल ठरविण्याचा प्रयत्न केला, तर कांहीं पंडितांनीं 'ज्योतिषशास्त्राधारें' आपला प्रयत्न केला. आणखी कांहींजणांनीं 'भाषाशास्त्र व्याकरण' यांचा आधार घेतला. पण ही आधाराला घेतलेलीं साधनेंच मुळांत पूर्ण नसल्यामुळें यासंबंधीं कांहींच सिद्धान्त प्रस्थापित झालाहि नाहीं व होणें शक्यहि नाहीं. कारण भूस्तर-शास्त्रच आज अपूर्ण अवस्थेंत असल्यामुळे तें निर्णायक साधन बनूं शकत नाहीं. ज्योतिषशास्त्राधारें जी स्थिति वेदकालीन म्हणून गृहीत धरली आहे तीहि अशीच आहे. कारण प्रत्येक एकवीस सहस्त्र वर्षांनीं तीच तीच स्थिति खगोलांत दिसून येईल हें गणिताधारें सिद्ध झालेलें आहे व भाषाशास्त्र आणि व्याकरण हें तर समकालीसुद्धा एकरूप असत नाहीं हें तज्ज्ञांना मान्यच आहे. अशा स्थितींत वेदांचा काल अमुक आहे अथवा त्याचे कर्ते अमुक अमुक होत हें ठरणें आणि ठरविणें अशक्य आहे. हा विषय फार मोठा असल्यामुळें व यासंबंधी उलट सुलट बाजूने अनेक राहिलें गेल्यामुळें या लहानशा लेखांत यासंबंधी अधिक लिहितां येणें शक्य नाहीं व तशी कांहीं आवश्यकताहि नाहीं. या बाब-तींत सश्रद्ध वैदिक लोकांनीं पारंपरिक चालत आलेलें वेदाचें अनादित्व व अपौरुषेयत्व मान्य करून त्याचें प्रामाण्य मान्य करणेंच युक्त आहे.

अनादि व अपौरुषेय वेदांतील एकहि अक्षरच नव्हें, तर काना-मात्रा किंवा स्वरदेखील आजदेखील जसाच्या तसाच स्थिर आहे. वेदांचे अध्याय, ऋचा, मंडलें, सूक्तें, अष्टकें हेच केवळ नव्हेत तर अक्षर संख्या-देखील मोजून काढली. ऋग्वेदाबाबत—

**ऋचां दशसहस्त्राणि ऋचां पञ्चशतानि च**
**ऋचामशीतिः पादश्चैतत्पारायणमुच्यते ।**

अशी माहिती चरणव्यूहाच्या ऋग्वेदखंडांतील चौथ्या भागांत आली आहे ( जिज्ञासूंनी अधिक माहितीसाठी उम्बरखेडच्या उत्तमश्लोक मंडळानें प्रसिद्ध केलेलें '**चरणव्यूहभाष्यानुवाद**' हें पुस्तक पाहावें ). वेदांचे अक्षर नि अक्षर बांधून टाकण्यासाठीं प्राचीनांनी 'विकृति' निर्माण केल्या. त्याचीहि माहिती सामान्य लोकांस उपलब्ध नाहीं. वेद विकृति या आठ प्रकारच्या आहेत. त्यांची नांवें—

॥ श्रीः ॥

# किंचित् प्रास्ताविक

" **वेदोऽखिलो धर्ममूलम्** " हें वैदिक धर्माचें मूळ सूत्र आहे. भारत देश धर्मप्रधान आहे व सर्वधर्माचें मूळ अधिष्ठान वेद आहेत. त्या वेदांचें परंपरेनें रक्षण करण्याची जबाबदारी मुख्यतः वैदिक धर्मानुयायांवर आहे. पण गेल्या अनेक शतकांपासून भारतास कमीअधिक प्रमाणांत परधर्मीयांच्या पारतंत्र्यातच राहण्यांचा दुर्दैवी प्रसंग आल्यामुळें वेदांविषयी वैदिक-धर्मानुयायांनाहि कांहीं माहिती राहिली नाहीं. अशाहि करालकालांत ज्या वैदिक ब्राह्मणांनीं आपल्या सर्व वैयक्तिक सुखाचा त्याग करून व अक्षरशः रक्ताचें पाणी करून आजपर्यंत वेदविद्येचें रक्षण केले, त्या वेदोनारायणांस सर्व वैदिक-धर्मीय लोकांनीं अत्यादरानें नमन करून त्यांचा सदैव गौरवच केला पाहिजे. त्याप्रमाणें आजहि वेदाविषयीं नितांत आदर मनांत ठेवून त्यावर श्रद्धा ठेवणारे लोक वेदमंत्र कानांवरून तरी जावेत अशी इच्छा करतात व वैदिक-ब्राह्मणांची यथाशक्ति पूजा करून त्यांच्या ऋणांतून अंशतः तरी मुक्त होण्याचें श्रेय संपादन करतात. पण ही त्यांची श्रद्धा किंवा आदर एका दृष्टीनें आंधळा आहे. कारण या लोकांना वेदाचा अर्थ समजणे तर दूरच पण साधी मंत्र-पद्धतीहि माहीत नसते. त्यांच्यासाठी भारतांतील प्रसिद्ध घनपाठी वे. मू. **द. पां. किंजवडेकर गुरुजी** यांनीं '**मंत्रजागरासंबंधी संक्षिप्त माहिती**' या नांवाची ही जीं लहानशी पुस्तिका काढली आहे त्यावरून वेदमंत्र म्हणण्याच्या प्रचलित पद्धतीची कांहींशी तोंड-ओळख जिज्ञासू लोकांना होईल यांत शंका नाहीं. या पुस्तिकेंत सर्व परिचित असणाऱ्या '**यज्ञेन यज्ञं**' या मंत्राच्या उदाहरणानें मंत्रजागराची माहिती करून दिली आहे. व तदनुरोधानें जटा, घन, इत्यादि विकृतीचेंहि स्वरूप दाखविलें आहे. तें उपयुक्तच आहे.

---

. . . वेद हे अनादि व अपौरुषेय आहेत असा वैदिकांचा सिद्धांत आहे. त्यामुळें त्यांच्या उत्पत्तीचा काळ किंवा त्यांचे कर्ते यांचा विचार करण्याचें त्यांना कांहींच कारण नाहीं. पण ज्यांना वेदांचें यथार्थ स्वरूपच आकलन झालें नाहीं व होणें शक्यहि नाहीं अशा कांहीं आधुनिक पाश्चात्य व पौरस्त्य पंडितांनी वेदांचा काल व कर्ते ठरविण्याचा अपुरा व अयशस्वी प्रयत्न केला आहे. त्यांच्या या संबंधीच्या विचारांचा साकल्यानें एकत्र विचार केल्यास कोठेंच एकमत झालेले व कोणताच

निश्चित ठाम सिद्धांत निघालेला दिसत नाहीं. याचें कारण उघडच आहे कीं, वेद-काल-निर्णयासाठीं त्यांनीं उपयोगांत आणलेलीं साधनें आणि प्रमाणें अपूर्ण आणि दुर्बल आहेत. उदाहरणार्थ-कित्येकांनीं 'भूस्तर' शास्त्राच्या आधारानें वेदकाल ठरविण्याचा प्रयत्न केला, तर कांहीं पंडितांनीं 'ज्योतिषशास्त्राधारें' आपला प्रयत्न केला. आणखी कांहींजणांनीं 'भाषाशास्त्र व्याकरण' यांचा आधार घेतला. पण ही आधाराला घेतलेलीं साधनेंच मुळांत पूर्ण नसल्यामुळें यासंबंधीं कांहींच सिद्धान्त प्रस्थापित झालाहि नाहीं व होणें शक्यहि नाहीं. कारण भूस्तर-शास्त्रच आज अपूर्ण अवस्थेंत असल्यामुळे तें निर्णायक साधन बनू शकत नाहीं. ज्योतिषशास्त्राधारें जी स्थिति वेदकालीन म्हणून गृहीत धरली आहे तीहि अशीच आहे. कारण प्रत्येक एकवीस सहस्त्र वर्षांनीं तीच तीच स्थिति खगोलांत दिसून येईल हें गणिताधारें सिद्ध झालेलें आहे व भाषाशास्त्र आणि व्याकरण हें तर समकालीसुद्धा एकरूप असत नाहीं हें तज्ज्ञांना मान्यच आहे. अशा स्थितींत वेदांचा काल अमुक आहे अथवा त्याचे कर्ते अमुक अमुक होत हें ठरणें आणि ठरविणें अशक्य आहे. हा विषय फार मोठा असल्यामुळें व यासंबंधी उलट सुलट बाजूने अनेक राहिलें गेल्यामुळें या लहानशा लेखांत यासंबंधी अधिक लिहितां येणें शक्य नाहीं व तशी कांहीं आवश्यकताहि नाहीं. या बाब-तींत सश्रद्ध वैदिक लोकांनीं पारंपरिक चालत आलेलें वेदाचें अनादित्व व अपौरुषेयत्व मान्य करून त्याचें प्रामाण्य मान्य करणेंच युक्त आहे.

अनादि व अपौरुषेय वेदांतील एकहि अक्षरच नव्हें, तर काना-मात्रा किंवा स्वरदेखील आजदेखील जसाच्या तसाच स्थिर आहे. वेदांचे अध्याय, ऋचा, मंडलें, सूक्तें, अष्टके हेच केवळ नव्हेत तर अक्षर संख्या-देखील मोजून काढली. ऋग्वेदाबाबत—

**ऋचां दशसहस्राणि ऋचां पञ्चशतानि च**
**ऋचामशीतिः पादश्चैतत्पारायणमुच्यते ।**

अशी माहिती चरणव्यूहाच्या ऋग्वेदखंडांतील चौथ्या भागांत आली आहे ( जिज्ञासूंनी अधिक माहितीसाठी उम्बरखेडच्या उत्तमश्लोक मंडळानें प्रसिद्ध केलेलें '**चरणव्यूहभाष्यानुवाद**' हें पुस्तक पाहावें ). वेदांचे अक्षर नि अक्षर बांधून टाकण्यासाठीं प्राचीनांनी 'विकृति' निर्माण केल्या. त्याचीहि माहिती सामान्य लोकांस उपलब्ध नाहीं. वेद विकृति या आठ प्रकारच्या आहेत. त्यांची नांवें—

**जटा-माला-शिखा-रेखा-ध्वजो-दण्डो-रथो-घनः ।**

अशीं आहेत. अर्थात् पदें, व क्रम यांची गणना यांत नाहीं. विकृतींचीं लक्षणें व स्वरूप 'जटापटल' ग्रंथांत सविस्तर आहेत. या सर्वच विकृति आज वैदिकांच्या म्हणण्यांत नाहींत. त्यापैकीं जेवढ्या प्रस्तुत प्रचलित आहेत, त्यांची माहिती श्री. वे. मू. द. पां. किंजवडेकर गुरुजींनीं आपल्या पुस्तिकेंत दिलीं आहे. घनपाठाच्या पद्धति दोन होत्या. पण आज एकच प्रकारचा घन प्रचारांत आहे. कितीहि केलें तरी हा विषय मुळांतच कठीण व किचकट असल्यामुळे सर्वांना समजण्यासारखा नाहीं. तथापि तो थोडातरी समजून देण्याचा प्रयत्न केल्याबद्दल लेखक धन्यवादास पात्र आहेत यांत शंकाच नाहीं. वेदासंबंधी अशीच लहान लहान पुस्तकें प्रसिद्ध झाल्यास सामान्य लोकांस त्या संबंधी कांहीं तरी माहिती उपलब्ध होईल. वैदिकधर्माभिमानी लोकानीं ही पुस्तिका घेऊन आपल्या वेदविषयक माहितीत भर घालावी अशी प्रार्थना करून हा लेख संपवितो.

दत्तजयंती, शके १८८८ विनीत
आनंदाश्रम, पुणें २ **गणेशशास्त्री जोशी**

---

॥ श्रीः ॥

# मन्त्रजागरासंबंधी संक्षिप्त माहिती

लेखक : **घनपाठी द. पां. किंजवडेकरगुरुजी**, वेदपाठशाळा, पुणें.

वैदिक मंडळींकडून जो मन्त्रजागर म्हटला जातो त्या बाबतीत नेहमी श्रोतृवर्गाकडून जिज्ञासा केली जाते कीं तुम्ही काय म्हणता याची आम्हाला माहिती द्या. मन्त्रजागर म्हणत असतांना माहिती देणें गैर-सोयीचें होतें व आम्ही काय सांगितलें तें ऐकणाऱ्याच्याहि लक्षात रहाणें कठीण, कारण त्या विषयाचा परिचय नसतो. म्हणून थोडक्यांत मन्त्र-जागराविषयीं माहिती देत आहे. मन्त्रजागर हा सर्वसामान्य एक तास म्हटला जातो. वेदमन्त्र हे पवित्र करणारे व कल्याण करणारे आहेत. प्रत्येकाला व्यक्तिशः वेदाध्ययन करणें शक्य नाहीं. तेव्हां ज्यांनीं वेदा-ध्ययन केलें आहे त्यांना कांहीतरी निमित्तानें बोलावून वेदपुरुषाची सेवा करावी यासाठीं मन्त्रजागर करतात.

आजच्या दृष्टीनें बोलावयाचें झालें तरी वेद हे सर्वप्रथम असें वाङ्मय आहे. वेद हे कोणी केलेले नाहींत. ते परमेश्वराचे श्वासांतून बाहेर पडले. ज्या ऋषीनीं जे मन्त्र पाहिले ते त्या मन्त्राचे ऋषी.

**मन्त्रजागरातून म्हटले जाणारे विषय :** १ संहिता, २ क्रम, ३ पद-पाठ, ४ ब्राह्मण, ५ षडङ्गांपैकीं कांही भाग, ६ जटा, ७ घन.

आतां प्रत्येक विषयाची थोडक्यांत माहिती.

संहिता ( ऋग्वेद ) या संहितेचे १०५८० मन्त्र आहेत. या सर्व मन्त्रांची पदें ( शब्द ) १५३८२६ व अक्षरें ४३२००० आहेत. या मन्त्रांचा आपल्या रोजच्या संध्येपासून ते आपले सर्व संस्कार व वाजपेय-अश्वमेध-यज्ञापर्यन्त सर्व कृत्यात विनियोग केलेला आहे. ऋग्वेद संहितेत प्रामुख्यानें देवतांची स्तुती आहे. (इन्द्र, अग्नि, सूर्य, वायु, वरुण, सोम, बृहस्पति वगैरे ) अध्यात्मदृष्टीनें व वैज्ञानिक दृष्टीनेंहि वेदमंत्रांचा विनियोग आहे. मंत्रजागरांत या संहितामन्त्रापैकीं कांही मन्त्र प्रथम म्हटले जातात.

त्यानंतर कांहीं मन्त्रांचा क्रमपाठ म्हटला जातोः— क्रमपाठ म्हणजे मूळ-संहिता मन्त्रांची पदें ( शब्द ) तीं पहिल्याला दुसरें, दुसऱ्याला तिसरें असे जोडणें. उदाहरणार्थ—

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**
या मंत्राची पदें ( शब्द )

**यज्ञेन । यज्ञम् । अयजन्त । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।**

ही पदें जोडणें. ती याप्रमाणें.

**यज्ञेन यज्ञम् । यज्ञमयजन्त । अयजन्त देवाः । देवास्तानि । तानि धर्माणि । धर्माणि प्रथमानि । प्रथमान्यासन् । आसन्नित्यासन् ।**

याप्रमाणें कांही मंत्रांचा क्रमपाठ म्हटला जातो.

मन्त्रजागर हा चर्चापद्धतीनें म्हटला जातो. ब्राह्मणांनीं समोरा समोर बसून एका बाजूच्या ब्राह्मणांनीं अर्धा मन्त्र म्हटल्यानंतर दुसऱ्या-बाजूचे ब्राह्मण पुढचा मन्त्रार्ध म्हणतात. याचप्रमाणें क्रमपाठांत एका बाजूनें एक द्वयी (एका पदाला दुसरें पद जोडणें याला द्वयी म्हणतात.) म्हटल्यावर समोरचे ब्राह्मण त्याच्या पुढची द्वयी म्हणतात. या पद्धतीनें कांही मन्त्रांचा क्रमपाठ म्हटला जातो.

त्यानंतर पदपाठः— **यज्ञेन यज्ञम्**. या मन्त्रार्धाचा पदपाठ पूर्वी दिले-लाच आहे. याचप्रमाणें कांही मन्त्रांचा पदपाठ म्हटला जातो. तो सुद्धां एका बाजूनें पहिलें पद म्हटल्यानंतर समोरचे ब्राह्मण त्या पुढील पद म्हणतात. याप्रमाणें पदपाठचर्चा होते. ती फार जलद म्हटली जाते. त्यामुळें ऐकणाऱ्याला पुस्तक घेऊनसुद्धां लक्ष ठेवणें कठीण जातें. पदांची चर्चा जलद गतीनें म्हणणें हें एक पठनांतील कौशल्य आहे. त्यानंतर ब्राह्मण ग्रन्थांतील कांहीं भाग म्हटला जातो. मूळ संहिता-मन्त्रांचा यज्ञांतून कसा विनियोग करावा याची माहिती ब्राह्मण ग्रंथांत आहे. यानंतर ६ वेदाङ्गें. (शिक्षा कल्पः व्याकरणं नैरुक्तं छंदः ज्योतिषम् ) या पैकीं थोडा भाग वेळ असल्यास म्हटला जातो.

१ शिक्षा—– वेदमन्त्रांचें शास्त्र ( उच्चारण वगैरे )

२ कल्पः—– यात दोन भाग आहेत. १ गृह्यसूत्र व २ श्रौतसूत्र. गृह्यसूत्रः—– यांत आपले नित्यनैमित्तिक संस्कार वगैरे सांगितले आहेत. श्रौतसूत्रः—– यांत अग्निहोत्रावर होणाऱ्या दर्शपौर्णमास-होमापासून अश्वमेधापर्यन्त यज्ञांतील ( होतृकर्माची ) माहिती आहे.

३ व्याकरणम्—– यांत संस्कृत भाषेचें शास्त्र संपूर्ण आहे. तें सूत्ररूपानें सांगितलें आहे. अष्टाध्यायी हें त्या सूत्रग्रन्थाचें नांव.

४ नैरुक्तम्—– यांत वेदांतील कठीण शब्दांचें स्पष्टीकरण केलें आहे.

५ छन्दः— यांत वेदमन्त्रांतील गायत्र्यादि छंदांचे व अनेक वृत्तांचें (शार्दूलविक्रीडित-वगैरे) स्पष्टीकरण केलें आहे.

६ ज्योतिष—– यात ज्योतिषशास्त्र सूत्ररूपानें सांगितलें आहें.

याप्रमाणें ही सहा वेदांगें झाल्यावर आठ विकृतीपैकी जटा व घन या प्रमुख दोन विकृतीपैकीं कांही मन्त्र म्हटले जातात.

**जटा** :— मूळ संहिता-मन्त्राचा पदपाठ शास्त्रोक्त पद्धतीनें संधि करून उलट सुलट म्हणणे. यात दोन पदांचाच संधि करावयाचा असतो. पहिल्या पदाला दुसरें, दुसऱ्याला तिसरें याप्रमाणे. उदाहरणार्थः—– वर घेतलेल्या **यज्ञेन यज्ञम्** या मंत्राचा पदपाठ. त्याचीच जटा याप्रमाणें:—– **यज्ञेन यज्ञं यज्ञं यज्ञेन यज्ञेन यज्ञम्** । यांतील पदांचा क्रम याप्रमाणें:—– एक दोन, दोन एक, एक दोन. यानंतर पहिलें पद सोडून द्यावयाचें व पुढचें एक पद घ्यावयाचे. या प्रमाणें संपूर्ण मन्त्र म्हणावयाचाः—– **यज्ञमयजन्तायजन्त यज्ञं यज्ञमयजन्त। अयजन्त देवा देवा अयजन्तायजन्त देवाः । देवास्तानि तानि देवा देवास्तानि । तानि धर्माणि धर्माणि तानि तानि धर्माणि। धर्माणि प्रथमानि प्रथमानि धर्माणि धर्माणि प्रथमानि । प्रथमान्यासन्नासन् प्रथमानि प्रथमान्यासन् । आसन्नित्यासन्।** याप्रमाणें जटा पाठ होतो. यांत एक पद सहा वेळां येतें.

**घनपाठ** :—– याचा प्रकार :—मूळ वेदमन्त्रांचा पदपाठ शास्त्रोक्त पद्धतीनें तीन पदांचा संधि करून म्हणणें. उदाहरणार्थः—– **यज्ञेन यज्ञं०** या मंत्राचा उत्तरार्ध :—– **ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ।** पदपाठः—– **ते । ह । नाकं । महिमानः । सचन्त । यत्र । पूर्वे । साध्याः । सन्ति । देवाः ।** घनपाठः—– **ते ह ह ते ते ह नाकं नाकं ह ते ते ह नाकं** याप्रमाणें तीन पदें संधि करून म्हणणें. याचा क्रम एक दोन, दोन एक, एक दोन तीन, तीन दोन एक, एकदोनतीन, याप्रमाणें, पहिलें पद सोडून द्यावयाचें व पुढचें एक पद धरावयाचें या पद्धतीनें संपूर्ण मंत्र म्हणणें. **ह नाकं नाकं ह ह नाकं महिमानो महिमानो नाकं ह ह नाकं महिमानः । नाकं महिमानो महिमानो नाकं नाकं महिमानः सचन्त सचन्त महिमानो नाकं नाकं महिमानः सचन्त। महिमानः सचन्त सचन्त महिमानो महिमानः सचन्त यत्र यत्र सचन्त महिमानो महिमानः सचन्त यत्र। सचन्त यत्र यत्र सचन्त सचन्त यत्र पूर्वे पूर्वे यत्र सचन्त सचन्त यत्र पूर्वे । यत्र पूर्वे पूर्वे यत्र यत्र पूर्वे साध्याः साध्याः पूर्वे यत्र यत्र पूर्वे साध्याः । पूर्वे साध्याः साध्याः पूर्वे पूर्वे साध्याः सन्ति सन्ति साध्याः पूर्वे पूर्वे साध्याः सन्ति । साध्याः सन्ति सन्ति साध्याः साध्याः सन्ति देवा देवाः सन्ति साध्याः साध्याः सन्ति देवाः । सन्ति देवा देवाः सन्ति**

याचा असतो. यांत प्रत्येक पद १३ वेळां येते. याप्रमाणें थोडक्यांत माहिती दिली आहे. आतां राहिलेला एक भाग म्हणजे उपनिषदें. तीं शुचिर्भूतपणानें (सोवळच्यानें) व सकाळच्या वेळांत म्हणावयाची असतात. म्हणून ती मंत्रजागरांत म्हणण्याचा परिपाठ नाहीं. आतां या जटा घन विकृतीतील तीच तीच पदें उलट सुलट म्हणण्याची आवश्यकता काय असेंही विचारलें जाते. वेदमन्त्रांत कानामात्रेचाहि फरक होऊं नये म्हणून शास्त्रकारांनी या विकृती निर्माण केल्या आहेत. व या विकृतीपठनामुळेंच वेदमन्त्र जसेच्या तसे राहिले आहेत. आज जगांत वेदांवाचून दुसरा कोणताहि ग्रन्थ पाठभेदरहित राहिला नाहीं. म्हणून विकृति पठनाचें महत्व आहे. व मन्त्र पाठभेदरहित राहिल्यामुळें आपण त्यांचा नित्य नैमित्तिक कर्मांत विनियोग करूं शकतो. वेदांतील मंत्रांचा व सूक्तांचा जप होम वगैरे करून आपल्या अनेक कामना पूर्ण करून घेतां येतात असें ऋग् विधानांत सांगितलें आहे. उदाहरणार्थः— सौर मन्त्रांचे अनुष्ठानानें हृद्रोगासारखे रोग बरे होतात. 'मुञ्चामि त्वा' सूक्ताचा जप केला असतां क्षयासारखे रोग बरे होतात. मन्युसूक्ताचें अनुष्ठान केलें असतां शत्रूचा पराजय होतो, याप्रमाणें प्रत्येक सूक्ताचा कांही ना कांही विनियोग आहे. वेदाची गुरुपरंपरेनें पठनपद्धति चालू राहिली व वेदमन्त्रांची संहिता स्वाहाकार वगैरे अनुष्ठानें व मन्त्रजागरादि कार्यक्रम चालू राहिले म्हणून आजपर्यंत वेद जसेच्या तसे कायम आहेत. व ते यापुढेंहि तसेंच रहावेत याकरितां प्रयत्नांची अत्यंत आवश्यकता आहे.

* * *

---

संपादकः मुद्रकः प्रकाशकः स्वामी – वसन्त अनन्त गाडगीळ

मुद्रणस्थलम्– यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.

प्रकाशनस्थलम्-१.- म.म. प्रा.द.वा.पोतदार,४९८ शनिवार,पुण्यपत्तनम् २.

२.–श्री. ल.म. चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४.

कार्यालयः— खजिनामहालभवनम्, ४३५ सदाशिव, पुण्यपत्तनम् २.

# हिन्दूकरणप्रयोगः।

सभ्यान् आहूय तेषाम् अग्रतः प्रार्थयेत्।

सर्वे धर्मविवेक्तारो गोप्तारः सकला द्विजाः।
मम देहस्य संशुद्धिं कुर्वन्तु द्विजसत्तमाः ॥
हिन्दुधर्मप्रवेशाय मामनुज्ञां प्रयच्छथ।
हिन्दूकृतः पवित्रोऽहं भवेयं हिन्दुराष्ट्रिकः ॥

सभ्याः— ॐ तथा।

(सभ्यान् नमस्कृत्य)

**आचमनम्** —

ॐ केशवाय नमः। नारायणाय नमः। माधवाय नमः।
गोविन्दाय नमः। विष्णवे नमः। मधुसूदनाय नमः।
त्रिविक्रमाय नमः। वामनाय नमः। श्रीधराय नमः।
हृषीकेशाय नमः। पद्मनाभाय नमः। दामोदराय नमः।
संकर्षणाय नमः। वासुदेवाय नमः। प्रद्युम्नाय नमः।
अनिरुद्धाय नमः। पुरुषोत्तमाय नमः। अधोक्षजाय नमः।
नारसिंहाय नमः। अच्युताय नमः। जनार्दनाय नमः।
उपेन्द्राय नमः। हरये नमः। श्रीकृष्णाय नमः ॥

**प्राणायामः** —

ॐ भूः। ॐ भुवः। ॐ सुवः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यम्।

ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात् ॥

ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्।

**गणपतिध्यानम्** — तत्रादौ महागणपतिं ध्यायामि ।

ॐ गणानां त्वा गणपतिं हवामहे
कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत
आ नः शृण्वन्नूतिभिः सीद सादनम् ।।

श्रीमहागणाधिपतये नमो नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । एतत्कर्मप्रधानदेवताभ्यो नमः । सर्वेभ्यो देवेभ्यो नमो नमः ।। अविघ्नमस्तु ।

सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।
लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ।। १
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।
द्वादशैतानि नामानि यः पठेत् शृणुयादपि ।। २
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।
संग्रामे संकटे चैव विघ्नस्तस्य न जायते ।। ३
शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।। ४
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।। ५
सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ।। ६
तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ।।७
लाभस्तेषां जयस्तेषां, कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ।। ८
विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् ।
सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ।। ९

अभीप्सितार्थसिद्धयर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ।। १०
सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ।। ११

**देशकालोच्चारणम्ः**—

श्रीमद्‌भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य ब्रह्मणो द्वितीये परार्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे कलियुगे प्रथमचरणे भरतवर्षे भरतखण्डे—

**संकल्पः** —

अस्मिन् वर्तमाने अद्य शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृति-पुराणोक्तफलप्राप्त्यर्थं हिन्दूकरणसंस्कारार्थं श्रीपरमेश्वरप्रीत्यर्थं हिन्दूकरणविधिं करिष्ये । तदङ्गत्वेन पुण्याहवाचनादि करिष्ये ।

**पुण्याहवाचनम्** —

(सभ्यान् उद्दिश्य) ॐ अस्य करिष्यमाणहिन्दूकरणाख्यस्य कर्मणः पुण्याहम् अस्तु इति भवन्तो ब्रुवन्तु ।
सभ्याः – अस्तु पुण्याहम् ।

ॐ अस्य करिष्यमाणहिन्दूकरणाख्यस्य कर्मणः स्वस्ति अस्तु इति भवन्तो ब्रुवन्तु ।
सभ्याः – अस्तु स्वस्ति ।

ॐ अस्य करिष्यमाणहिन्दूकरणाख्यस्य कर्मणः ऋद्धिरस्तु इति भवन्तो ब्रुवन्तु ।

सभ्याः – कर्म ऋध्यतात् ।

गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् संनिधिं कुरु ।।
(इति जलम् अभिमन्त्रयेत् । )

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥
(तुलसीपत्रेण दर्भैर्वा पात्रादीनि प्रोक्षयेत्)

सभ्याः – सर्वं शुचिः ।

**मार्जनम्**—

ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महेरणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।आपो जनयथा च नः ॥

**जलाभिमन्त्रणम्**— (जलपात्रे तुलसीपत्रं निधाय)

ॐ आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोन्नमापः अमृतमापः सम्राडापो विराडापः स्वराडापः छन्दांस्यापो ज्योतींष्यापो यजूंष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवः सुवराप ॐ ।

**मन्त्राचमनम्**—

ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदह्ना पापमकार्षम् । मनसा वाचा हस्ताभ्याम् । पद्भ्यामुदरेण शिश्ना । अहस्तदवलुम्पतु । तत्किञ्च दुरितं मयि । इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा । (आचमेत्)

**महाभिषेकः** —

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥१
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २

वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥३
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥४
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥ ५
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ ७
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ ८
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥९
ॐ शान्तिः पुष्टिस्तुष्टिश्चास्तु ।

**नामकरणं, तिलक-वस्त्रादिधारणम्—**

ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ (धारयेत्)

**हिन्दूकरणप्रधानहोमः —**

( आचम्य प्राणानायम्य ) अस्य हिन्दूकरणाख्यस्य कर्मणः प्रधानाङ्गभूतं होमं करिष्ये ।

**स्थण्डिलादिकरणम् —**

ॐ भूमिर्धेनुर्धरिणी लोकधारिणी ।
उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ॥

मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥
मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके ।
त्वया हतेन पापेन गच्छामि परमां गतिम् ॥
(स्थण्डिलं कृत्वा तस्योपरि अग्निं निधाय, प्रज्वाल्य)

**अग्निस्थापना**— ॐ शुद्धिनामानमग्निं प्रतिष्ठापयामि ।
ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम्॥
अग्निः पूर्वेभिः ऋषिभिरीड्यो नूतनैरुत । स देवान् एह वक्ष्यति॥
अग्नये नमः ।

सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः ।
त्रिपात् प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥ १
स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ।
बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ॥ २
तोमरं व्यजनं वामैर्घृतपात्रं च धारयन् ।
आत्माभिमुखमासीन एवंरूपो हुताशनः ॥ ३

अग्ने वैश्वानर शाण्डिल्यगोत्र मेषध्वज प्राङ्मुख देव मम संमुखो वरदो भव । परिसमूहनम् । परिसमूहनम् । परिसमूहनम् ॥
(दर्भान् आस्तीर्य) पर्युक्षणम् । पर्युक्षणम् । पर्युक्षणम् ॥

**होमः** — (अग्नेः पश्चाद् आस्तीर्णेषु दर्भेषु आज्यपात्रं निधाय)
ॐ अग्नये स्वाहा । अग्नय इदं न मम ॥
ॐ वायवे स्वाहा । वायव इदं न मम ॥
ॐ सूर्याय स्वाहा । सूर्याय इदं न मम ॥
ॐ प्रजापतये स्वाहा । प्रजापतय इदं न मम ॥
ॐ इन्द्राय स्वाहा । इन्द्राय इदं न मम ॥
ॐ वरुणाय स्वाहा । वरुणाय इदं न मम ॥

ॐ यमाय स्वाहा । यमाय इदं न मम ।।
ॐ यमधर्माय स्वाहा । यमधर्माय इदं न मम ।।
ॐ विश्वेभ्यो देवेभ्यः स्वाहा । विश्वेभ्यो देवेभ्य इदं न मम ।।
ॐ भूः स्वाहा । अग्नय इदं न मम ।
ॐ भुवः स्वाहा । वायव इदं न मम ।
ॐ सुवः स्वाहा । सूर्याय इदं न मम ।
ॐ भूर्भुवः सुवः स्वाहा । प्रजापतय इदं न मम ।।

**पूजनम्**–(फलपुष्पधूपदीपैः अग्नि संपूज्य)

ॐ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावा दुरितातिपर्षि ।
अग्ने अत्रिवन्नमसा गृणानः अस्माकं बोध्यविता तनूनाम् ।।
यस्त्वा हृदा कीरिणा मन्यमानः अमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ।।
यस्मै त्वं सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ।
अश्विनं सपुत्रिणं वीरवन्तं गोमन्तं रयिं न शते स्वस्ति ।।
(दर्भान् उत्तरे विसृज्य)

परिसमूहनम् । परिसमूहनम् । परिसमूहनम् ।
पर्युक्षणम् । पर्युक्षणम् । पर्युक्षणम् ।

**विभूतिधारणम्** –

अग्नये नमः । अग्नये नमः । अग्नये नमः ।।

मा नः स्तोके तनये मान आयुषि मानो गोषु मानो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्रभामितो वधीर्हविष्मन्तो नमसा विधेम ते ।।

**प्रार्थना** —

श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।
आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ।।

प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु त्‌य ।।
स्मरणादेव तद् विष्णोः संपूर्णं स्यादिति स्मृतिः ।
विष्णवे नमो विष्णवे नमो विष्णवे नमः ।।

---

## साहित्यम् ।

रङ्गवल्ली-साहित्यम्, हरिद्रा, कुङ्कुमम्, आम्रपल्लवाः, पीठासनम्, पात्रम्, चमसद्वयम्, ताम्रपात्रद्वयम्, वाटिका, मृत्तिका, काष्ठेन्धनम्, कर्पूरधूपादिकम्, अग्निप्रज्वालिका, दर्भाङ्कुराः, तुलसीपत्राणि, घृतम्, समिधः, नीराजनम्, यज्ञोपवीतम्, श्रीफलम् इ०

श्रीवत्सबालमन्दिरे (मुम्बई) भारतशिक्षाराज्यमन्त्रिण:





उपरितने चित्रे वामत:—शारदाकारा:, शिक्षाराज्यमन्त्री, संस्कृतं पठन् बाल:
पं. श्रीपाद कवीश्वर, अधस्तने चित्रे—विश्वरूपं दर्शयन्ती 'प्रियदर्शिनी'

शारदा- (पुण्यपत्तनम् २.) ८:२३-२४ * रजि. क्र. एम्. एच्. ५५७
• लायसेन्स क्र. १३७ टु पोस्ट विदौट प्रीपेमेण्ट.

## प्रा. शेरसिंहेभ्यः विविधसंस्कृतसंस्थाभ्यः संमानपत्रम् ।



सुरभारती-संस्थापकः मुम्बई-नगर-श्रेष्ठी श्रीमान् करमसी सोमैया राज्यशिक्षामन्त्रिभ्यः संमानपत्रं समर्पयति । कोणे विराजते श्रीवत्सबाल-मन्दिरस्य संचालकः श्री. लक्ष्मीकान्त चक्रदेवमहोदयः

संपादकः मुद्रकः प्रकाशकः स्वामी — वसन्त अनन्त गाडगीळ
मुद्रणस्थलम्— यशवन्त मुद्रणालयः, १८३५ सदाशिव, पुण्यपत्तनम् २.
प्रकाशनस्थलम्- १. म.म.प्रा.द.वा. पोतदार, ४९८ शनिवार, पुण्यपत्तनम् २.
२.—श्री.ल.म.चक्रदेव, ३१८ राममोहनमार्गः मुम्बापुरी ४.
कार्यालयः—— खजिनामहालभवनम्, ४२५ सदाशिव, पुण्यपत्तनम् २.